# आर्तत्राणस्तोत्रम् गङ्गाधरस्तोत्रम् च
अप्पयदीक्षितविरचितम्

क्षीराम्भोनिधिमन्थनोद्भवविषात् सन्दह्यमानान् सुरान्
ब्रह्मादीनवलोक्य यः करुणया हालाहलाख्यं विषम् ।
निश्शङ्कं निजलीलया कवलयन् लोकान् ररक्षादरात्
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ १॥

क्षीरं स्वादु निपीय मातुलगृहे गत्वा स्वकीयं गृहं
क्षीरालाभवशेन खिन्नमनसे घोरं तपः कुर्वते ।
कारुण्यादुपमन्यवे निरवधिं क्षीराम्बुधिं दत्तवान्
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ २॥

मृत्युं वक्षसि ताडयन् निजपदध्यानैकभक्तं मुनिं
मार्कण्डेयमपालयत् करुणया लिङ्गाद्विनिगत्य यः ।
नेत्राम्भोजसमर्पणेन हरयेऽभीष्टं रथाङ्गं ददौ
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ ३॥

ऊढं द्रोणजयद्रथादिरथिकैः सैन्यं महत् कौरवं
दृष्ट्वा कृष्णसहायवन्तमपि तं भीतं प्रपन्नार्तिहा ।
पार्थं रक्षितवानमोघविषयं दिव्यास्त्रमुद्बोषयन्
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ ४॥

बालं शैवकुलोद्भवं परिहसत्स्वज्ञातिपक्षाकुलं
खिद्यन्तं तव मूर्ध्नि पुष्पनिचयं दातुं समुध्यत्करम् ।
दृष्ट्वाऽऽनम्य वरिञ्चिरम्यनगरे पूजां त्वदीयां भजन्
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ ५॥

सन्त्रस्तेषु पुरा सुरासुरभयादिन्द्रादिवृन्दारके-
ष्वारूढो धरणीरथं श्रुतिहयं कृत्वा मुरारिं शरम् ।
रक्षन् यः कृपया समस्तविबुधान् जित्वा पुरारीन् क्षणात्
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ ६॥

श्रौतस्मार्तपथे पराङ्मुखमपि प्रोद्यन्महापातकं
विश्वातीतमपत्यमेव गतिरित्यालापयन्तं सकृत् ।
रक्षन् यः करुणापयोनिधिरिति प्राप्तप्रसिद्धिः पुरा
ह्यार्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ ७॥

गाङ्गं वेगमवाप्य मान्यविबुधैः सोढुं पुरा याचितो
दृष्ट्वा भक्तभगीरथेन विनतो रुद्रो जटामण्डले ।
कारुण्यादवनीतले सुरनदीमापूरयतपावनीं
आर्तत्राणपरायणः स भगवान् गङ्गाधरो मे गतिः ॥ ८॥

॥ इति श्रीमदप्पयदीक्षितविरचितं आर्तत्राणस्तोत्रं सम्पूर्णम् ॥